॥ गोपालविंशतिस्तोत्रम् ॥

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

वन्दे वृन्दावनचरं वलव्वीजनवल्लभम् ।
जयन्तीसम्भवं धाम वैजयन्तीविभूषणम् ॥ १॥

वाचं निजाङ्करसिकां प्रसमीक्षमाणो
वक्त्रारविन्दविनिवेशितपांचजन्यः ।
वर्णः त्रिकोणरूचिरे वरपुण्डरीके
बद्धासनो जयति वल्लवचक्रवर्ती ॥ २॥

आम्नायगन्धरुदितस्फुरिताधरोष्ठम्
आस्राविलेक्षणमनुक्षणमन्दहासम् ।
गोपालडिम्भवपुषं कुहना जनन्याः
प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ ३॥

आविर्भवत्वनिभृताभरणं पुरस्तात्
आकुंचितैकचरण निभृहितान्यपादम् ।
दध्नानिबद्धमुखरेण निबद्धतालं
नाथस्य नन्दभवने नवनीतनाट्यम् ॥ ४॥

कुन्दप्रसूनविशदैर्दशनैश्चर्तुभिः
संदश्य मातुरनिशं कुचचूचुकाग्रम् ।
नन्दस्य वक्त्रमवलोकयतो मुरारेर्-
मन्दस्थितं मममनीषितमातनोतु ॥ ५॥

हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदौ नापगच्छन्न तिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥ ६॥

व्रजयोषिदपाङ्ग वेधनीयं
मथुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधू स्तनन्धयं तद्-
किमपि ब्रह्म किशोरभावदृश्यम् ॥ ८॥

परिवर्तितकन्धरं भयेन
स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चिद्-
विपुलोलूखलकर्षकं कुमारम् ॥ ९॥

निकटेषु निशामयामि नित्यं
निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं
यमुनासाक्षिकयौवनं युवानम् ॥ १०॥

पदवीमदवीयसीं विमुक्ते-
रटवीं सम्पदम्बु वाहयन्तीम् ।
अरूणाधरसाभिलाषवंशां
करूणां कारणमानुषीं भजामि ॥ ११॥

अनिमेषनिवेष्णीयमक्ष्णो-
रजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तलं कलापैः
करूणोन्मादकविग्रहं महो मे ॥ १२॥

अनुयायिमनोज्ञवंशनालै-
रवतु स्पर्शितवल्लवीविमोहैः ।
अनघस्मितशीतलैरसौ माम्
अनुकम्पासरिदम्बुजैरपाङ्गैः ॥ १३॥

अधराहितचारूवंशनाला
मकुटालम्बिमयूरपिञ्च्छमालाः ।
हरिनीलशिलाविभङ्गनीलाः
प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥ १४॥

अखिलानवलोकयामि कालान्
महिलादीनभुजान्तरस्यूनः ।
अभिलाषपदं व्रजाङ्गनानाम्
अभिलाक्रमदूरमाभिरूप्यम् ॥ १५॥

महसे महिताय मौलिना
विनतेनाञ्जलिमञ्जनत्विषे ।
कलयामि विमुग्धवल्लवी-

वलयाभाषितमञ्जुवेणवे ॥ १६॥

जयतु ललितवृत्तिं शिक्षितो वल्लवीनां
शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेशस्य विष्णो-
रधरमणिसुधायामंशवान् वंशनालः ॥ १७॥

चित्राकल्पः श्रवसि कलयल्लाङ्गलीकर्णपूरं
बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुंजाबद्धामुरसि ललितां धारयन् हारयष्टिं
गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १८॥

लीलायष्टिं करकिसलये दक्षिणे न्यस्त धन्या-
मंसे देव्याः पुलकरुचिरे सन्निविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणु-
र्गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १९॥

प्रत्यालीढस्थितिंअधिगतां प्राप्तगाढाङ्कपालीं
पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्याद्
वारिक्रीडानिबिडवसनो वल्लवीवल्लभो नः ॥ २०॥

वासो हृत्वा दिनकरसुतासन्निधौ वल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।
सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने
कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २१॥

इत्यनन्यमनसा विनिर्मितां
वेंकटेशकविना स्तुतिं पठन् ।
दिव्यवेणुरसिकं समीक्षते
दैवतं किमपि यौवतप्रियम् ॥ २२॥

॥ इति श्रीवेदान्तदेशिककृतं गोपालविंशतिस्तोत्रं सम्पूर्णम् ॥